# ॥ गोपीचन्दनोपनिषत् ॥

गोपिकास्वान्तसंलीनं श्रीकृष्णाख्यं परं महः ।
ब्रह्मानन्दस्वरूपं तत्स्वमात्रमिति चिन्तये ॥ १॥

ॐ भद्रं कर्णेभिः श‍ृणुयाम देवाः ।
भद्रं पश्येमाक्षभिर्यजत्राः ।
स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेम देवहितं यदायुः ।
स्वस्ति न इन्द्रो वृद्धश्रवाः । स्वस्ति नः पूषा विश्ववेदाः ।
स्वस्ति नस्ताक्ष्र्यो अरिष्टनेमिः । स्वस्ति नो बृहस्पतिर्दधातु ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

हरिः ॐ ॥ गोपी का नाम । संरक्षणी ।
कुतः संरक्षणी । लोकस्य नरकान्मृत्योर्भयाच्च
संरक्षणी । चन्दनं तुष्टिकारणं च । किं तुष्टिकारणम् ।
ब्रह्मानन्दकारणम् । य एवंविद्वानेतदाख्यापयेद्य एतच्च
धारयेद्गोपीचन्दनमृत्तिकाया निरुक्त्या धारणमात्रेण च
ब्रह्मलोके महीयते ब्रह्मलोके महीयत इति ॥ १॥

गोप्यो नाम विष्णुपत्न्यः स्युस्तासां चन्दनमाह्लादनम् ।
कश्चाह्लादः । एष ब्रह्मानन्दरूपः । काश्च विष्णुपत्न्यो
गोप्यो नाम । या आत्मना ब्रह्मानन्दैकरूपं कृष्णाख्यं
परं धामाजयंस्ता जगत्सृष्टिस्थित्यन्तकारिण्यः
प्रकृतिमहदहमाद्या महामायाः । कश्च विष्णुः ।
परं ब्रह्मैव विष्णुः । कश्चाह्लादः । गोपीचन्दनसंसक्त-
मानुषाणां पापसंहरणाच्छुद्धान्तकरणानां
ब्रह्मज्ञानप्राप्तिश्च । य एवं वेदेत्युपनिषत् ॥ २॥

गोपीत्यग्र उच्यतां चन्दनं तु ततः पश्चात् । गोपीत्यक्षरद्वयं
चन्दनं तु त्रियक्षरं तस्मादक्षरपञ्चकम् । य एवंविद्वान्
गोपीचन्दनं धारयेदक्षयं पदमाप्नोति पञ्चत्वं न स पश्यति
ततोऽमृतत्वमश्नुते ततोऽमृतमश्नुत इति ॥ ३॥

अथ मायाशबलितं ब्रह्मासीत्ततश्च महदाद्या ब्रह्मणो
महामायासम्मिलितात् । पञ्चभूतेषु गन्धवतीयं पृथिव्यासीत् ।
पृथिव्याश्च वैभवाद्वर्णभेदाः । पीतवर्णा मृदो जायन्ते
लोकानुग्रहार्थम् । मायासहितब्रह्मसम्भोगवशादस्य चन्दनस्य

वैभवम् । य एवंविद्वान्यतिहस्ते दद्यादनुपप्लवः सर्वमायुरेति ।
ततः प्राजापत्यं रायस्पोषं गौष्पत्यं च । य एतद्रहस्यं
सायं प्रातर्ध्यायेदहोरात्रकृतं पापं नाशयति मृतो
मोक्षमश्नुत इति ॥ ४॥

गोपीचन्दनपङ्केन ललाटं यस्तु लेपयेत् ।
एकदण्डी त्रिदण्डी वा स वै मोक्षं समश्नुते ॥ १॥

गोपीचन्दनलिप्ताङ्गो यं यं पश्यति चक्षुषा ।
तं तं पूतं विजानीयाद्राजभिः सत्कृतो भवेत् ॥ २॥

ब्रह्महन्ता कृतघ्नश्च गोघ्नश्च गुरु तल्पगः ।
तेषां पापानि नश्यन्ति गोपीचन्दनधारणात् ॥ ३॥

गोपीचन्दनलिप्ताङ्गो म्रियते यत्र कुत्रचित् ।
अभिव्याप्यायतो भूत्वा देवेन्द्रपदमश्नुते ॥ ४॥

गोपीचन्दनलिप्ताङ्गं पुरुषं य उपासते ।
एवं ब्रह्मादयो देवास्तन्मुखास्तानुपासते ॥ ५॥

गोपीचन्दनलिप्ताङ्गः पुरुषो येन पूज्यते ।
विष्णुपूजितभूतित्वाद्विष्णुलोके महीयते ॥ ६॥

सदाचारः शुभाकल्पो मिताहारो जितेन्द्रियः ।
गोपीचन्दनलिप्ताङ्गः साक्षाद्विष्णुमयो भवेत् ॥ ७॥

गोपीचन्दनलिप्ताङ्गो व्रतं यस्तु समाचरेत् ।
ततः कोटिगुणं पुण्यमित्येवं मुनिरब्रवीत् ॥ ८॥

गोपीचन्दनलिप्ताङ्गैर्जपदानादि यत्कृतम् ।
न्यूनं सम्पूर्णतां याति विधानेन विशेषतः ॥ ९॥

गोपीचन्दनमायुष्यं बलारोग्यविवर्धनम् ।
कामदं मोक्षदं चैव इत्येवं मुनयोऽब्रुवन् ॥ १०॥

अग्निष्टोमसहस्राणि वाजपेय शतानि च ।
तेषां पुण्यमवाप्नोति गोपीचन्दनधारणात् ॥ ११॥

गोपीचन्दनदानस्य नाश्वमेधकृतः फलम् ।
न गङ्गया समं तीर्थं न शुद्धिर्गोपिचन्दनात् ॥ १२॥

बहुमाऽत्र किमुक्तेन गोपीचन्दनमण्डनम् ।
न तत्तुल्यं भवेल्लोके नात्र कार्या विचारणा ॥ १३॥

चन्दनं चापि गोपीनां केलिकुङ्कुमसम्भवम् ।
मण्डनात्पावनं नृणां भुक्तिमुक्तिफलप्रदम् ॥ १४॥

कृष्णगोपीरतोद्भूतं पापघ्नं गोपिचनदनम् ।
तत्प्रसादात्सर्वदैव चतुर्वर्गफलप्रदम् ।
तिलमात्रप्रदानेन काञ्चनाद्रिसमं फलम् ॥ १५॥

कुङ्कुमं कृष्णगोपीनां जलक्रीडासु सम्भृतम् ।
गोपीचन्दनमित्युक्तं द्वारवत्यां सुरेश्वरैः ॥ १६॥

कृष्णगोपीजलक्रीडाकुङ्कुमं चन्दनैर्युतम् ।
तिलमात्रं प्रदायेदं पुनात्या दशमं कुलम् ॥ १७॥

गोपीचन्दनखण्डं तु चक्राकारं सुलक्षणम् ।
विष्णुरूपमिदं पुण्यं पावनं पातवर्णकः ॥ १८॥

आपो वा अग्र आसन् । तत्र प्रजापतिर्वायुर्भूत्वाऽश्राम्यतेदं सृजेयमिति ।
स तपोऽतप्यत । तत ओङ्कारमपश्यत् । ततो व्याहृतीस्ततो गायत्रीम् ।
गायत्र्या वेदास्तैरिदमसृजत । धूममार्गविस्तृतं हि
वेदार्थमभिसन्धाय चतुर्दश लोकानसृजत । तत उपनिषदः
श्रुतय आविर्बभूवुः । अर्चिमार्गविस्तृतं वेदार्थमभिसन्धाय
सर्वान्वेदासरहस्योपनिषदङ्गान्ब्रह्मलोके स्थापयामास ।
ताश्चोपादिशद्वैवस्वतेऽन्तरे सगुणं ब्रह्म चिद्घनानन्दैकरूपं
पुरुषोत्तमरूपेण मथुरायां वसुदेवसद्मन्याविर्भविष्यति ।
तत्र भवत्यः सर्वलोकोत्कृष्टसौन्दर्यक्रीडाभोगा गोपिकास्वरूपैः
परब्रह्मानन्दैकरूपं कृष्णं भजिष्यथ ।
तत्र श्लोकाः ---इति ब्रह्मवरं लब्ध्वा श्रुतयो ब्रह्मश्लोकगाः ।
कृष्णमाराधयामासुर्गोकुले धर्मसङ्कुले ॥ १९॥

श्रीकृष्णाख्यं परं ब्रह्म गोपिकाः श्रुतयोऽभवन् ।
एतत्सम्भोगसम्भूतं चन्दनं गोपीचन्दनं चन्दनं गोपीचन्दनमित्युपनिषत् ॥ २०॥

ॐ भद्रं कर्णेभिः श्रुणुयाम देवाः ।
भद्रं पश्येमाक्षभिर्यजत्राः ।
स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेम देवहितं यदायुः ।
स्वस्ति न इन्द्रो वृद्धश्रवाः । स्वस्ति नः पूषा विश्ववेदाः ।
स्वस्ति नस्ताक्ष्यो अरिष्टनेमिः । स्वस्ति नो बृहस्पतिर्दधातु ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

इत्याथर्वणीया गोपीचन्दनोपनिषत्समाप्ता ॥